


| वर्ष ३ | आश्विन संवत् १९९१ वि० तदनुसार अक्तूबर १९३४ | पूर्ण संख्या १० संख्या २ |
|---|---|---|


# भारत-भूषणो महाराणा प्रतापः

( ले०—पं० कुलभूषणः )

( २ )

## राजा मानसिंहस्तस्य च मेवाड़यात्रा—

योधपुराधीशस्य दत्तकः पुत्र आसीत् कश्चिन् मानसिंह नामा शूरो यं सम्राडकबरः सेनापतिं चकार। विख्यातिश्चागात् समस्ते भारते तस्य वीरता। बहवो नवीनाः प्रान्ता विजित्य तेन देहली-पतेरकबरस्य राज्येन संयोजिताः। यदि मानसिंहोऽकबरस्य सेनापतिर्नाभविष्यत् तर्हि सम्राट्पदमपि जेतुं प्रसिद्धिं वा प्राप्तुमर्हो नाभविष्यदित्यासीदनुमतिरैतिहासिकानाम्। पश्चिमोत्तरान् भारत-प्रान्तान् स्वाधीनान्विधाय मानसिंहः पुनरपि जयार्थमन्यत्र भ्रान्तवान्। राजपूतदेशं मेवाड़देशं महाराणा प्रतापसिंहञ्च दिदृक्ष्

दक्षिणापदयात्रावसरे मानसिंहो महाराजदर्शनोत्सुकः सन्देशं प्रेषयति । युवराजसमेतो महाराजः सम्मानप्रदर्शनपुरःसरं सादरं राज्यप्रासादेषु नयत्यमुम् । राज्यसत्कारविधिपूर्वं सज्जं भोजनं च मानसिंहाय प्रेषितम् । मानसिंहस्तु भोजनकाले महाराज्ञा सहैव भोक्तव्यमिति भणित्वा तं प्रति भृत्यान् प्रेषयति । शिरोवेदनाव्याजेन महाराजस्यानुपस्थितिकारणं वास्तवमनुक्त्वैव भोजनाय मानसिंहं प्रबोधयत्यमात्यः । ज्ञात्वापि महाराजस्यानागमनहेतुं पुनरपि महाराजस्य युवराजस्य वागमनमैष्यत मानसिंहेन । मानसिंहस्तु "कथमस्माकमेकाकीनं भोजनं कीदृशं चातिथ्ययुक्त" मिति रोषयुक्तैर्वचनैरभाणीत् । अत्याग्रहे मानसिंहस्य कुपितो महाराणा युवराजवाचा तं प्रति "तव पित्रा स्वकन्या देहलीपतयेऽकबराय दत्वा स्वधर्मं पावनं राज्यपूतकुलञ्च कलङ्कितं स्वार्थञ्च साधितमतःप्रतापसिंहः स्वपंक्तौ भवादृशैः सह न भुङ्क्ते"—इति युवराजमुखेन निरगादीत् । कथयति सति युवराजस्य कटूनि वचनानि पितुः, मानसिंहो वेपथुविस्फुरिताधरः सज्जं भोजनं सत्कारञ्चापहाय महाराजदर्शितमपमानमसहमानस्त्वरितमेव देहली नगरमागत्य दिल्लीपतये च वृत्तमिदं निविवेद । दिल्लीपतिस्त्विदं स्वकीयमेवापमानं ज्ञात्वा दन्दह्यमानहृदयो महाराणा प्रतापसिंहस्य स्वातन्त्र्यमपनेतु स्पृहालुर्बभूव । त्वरितमेव राज्यसभामाहूय स्वश्यालाय सर्वं मानसिंहस्य वृत्तं भणित्वा प्रतापसिंहराज्यधानीं विजिगीषुः सम्राडकबरो योद्धुं सन्नद्धो बभूव । सेनाञ्च महतीं अश्वपदातिपुरःसरामुदयपुराक्रमणायादिदेश । मानसिंहाय च धनराशिं दत्वा स्वपुत्रञ्च तेन साकं कृत्वा सेनापतिं चकार ।

## युवराजसलीमस्य उदयपुराक्रमणम् ।

मानसिंहोऽपि स्वापमान—कलङ्कमपहर्तुं निखिलेन बलेन महत्या च शक्त्या घोटकपदातिशतघ्नीसेनासमवेतो मेवाडाधिपेन युयुत्सुः सज्जो बभूव । महाराजा प्रतापसिंहस्तु शत्रोराक्रमणसन्नाहं

ज्ञात्वा उदयपुरस्य समभूमिं शत्रूणामसंख्यसेनाबलस्य प्रतीकारायायोग्यमिति मत्वा स्वप्रजासेनासंवृतोऽरवलिपर्वतेषु विचचार। बहूनि नवीनानि स्थलानि दुर्गमदुर्गांश्च निर्माय सर्वामपि राजकीयां सम्पत्तिं मानवजातिञ्च स्वराज्यस्य पर्वतेष्वेव निदधे। यद्यपि देहलीपतेरकबरस्य महान् प्रबन्धो मानसिंहाधीनो युवराजसलीमसमेतो दरीदृश्यते तथापि स्वजातिगर्वमानधनयुक्ताः क्षत्रियाः प्रतापसिंहस्य पक्षमेवाशिश्रियन्।

अरवलि पर्वतेषु बहवः

राज्यपूतसामन्ताः सेनासमेताः प्रतापसिंहस्य स्वातन्त्र्यव्रतपालनाय मेवाडभूमिञ्च म्लेच्छाधिकारान् मोचयितुमहमहमिकया मुग़लसैनिकैर्योद्धुं भीषणान् रणनादान् चक्रुः। याते समये कतिपये निर्गतयोश्च पक्षयोर्द्वयोः सेनयोर्युद्धक्षेत्रे तस्मिन्नभून्महद्युद्धम्। बहवो यवना राज्यपूतबाणासिभिर्हता भूमौ पतिताः, परन्तु मुग़लानां शतघ्नीभागस्तु राज्यपूतयोधानां शक्तेरधिक आसीत्। एते वराका मुष्टियुद्धे शस्त्रयुद्धे च बलवन्तो दक्षाश्चासन्। परं शतघ्नीगोलकानामाक्षेपैर्बहवो हि पञ्चत्वं गताः। महाराणा प्रतापसिंहः स्वयं चेतकनामानमश्वमारुह्य बहून् यवनान् यमालयमानिनाय।

प्रतापसिंहस्य पराजयः।

मानसिंहस्य हननमपि गौणमेव निर्धार्य युवराजसलीममाक्रमितवान् प्रतापसिंहवीरः। चेतकाश्व एव युवराजस्य हस्तिदन्तोपरि पदे निक्षिप्ते सति महाराजा प्रतापसिंहस्तस्मिन्नसिना प्रहारमकरोत्। प्रहारे स्वलक्ष्यं प्राप्ते चीत्कारैर्गजचलनेन लक्ष्यवेधनेऽसमर्थ एव जातो महाराजः। एतादृशं साहसं महाराजस्य भग्नमनोरथस्य दृष्ट्वोत्साहं लेभिरे तस्यानुयायिनः। युवराजसलीममहिमुखाद्विमुक्तमिव लब्धाश्वासं विज्ञाय खिन्नो बभूव मानसिंहः। प्रचुरैश्च कटुवाक्यैर्निरभर्त्सयत च मुख्यान् यवनयोधान्। कोपमेतादृशं तस्यानुभूय सर्वशक्तिसमेता यवना महाराजाक्रमणहेतोः प्रता-

पथनस्य महाराजस्य राज्यध्वजां लक्षीकृत्य सर्वतस्तमेव प्राहरन्। कठोराणां यवनानां महाराजस्यैव शरीरे सर्वतः प्रहारलक्षणं, शतघ्निगोलकैर्दलितां चमूं मेवाडाधिपतेर्ज्ञात्वा झालारवः प्रियः सामन्तः प्रियसुहृदः शुभचिन्तकश्च प्रतापसिंहस्य रणादपसरणाय महाराजं प्रचोदयामास।

समरत्यागः।

मेवाडमेदिनीललामभूतस्य श्रीमतो महाराजस्य प्राणधारण एवास्ति सर्वेषां कल्याणम्। पराजये प्राप्ते महाराजे वा शत्रुहस्तगते, तस्य वा प्राणत्यागे राज्यपूतमेदिनी समस्तापि यवनहस्तगता स्यात्। बहुभिश्चैतादृशोभिर्युक्तिभिः प्रेरितः घोरं च युद्धं विफलमेव मन्यमानः पराजितमेवात्मानं स्वीकुर्वन् लज्जापरवशः जन्मभुवो हिताय झालारवेन भूयो भूयोऽपि प्रचोदितः समरक्षेत्रं तत्याज महाराणाप्रतापः। झालारवोऽपि निःसीमां स्वामिभक्तिं प्रदर्श्य युद्धक्षेत्र एव मुमोच प्राणान्। भ्राता शक्तिसिंहोऽपि सोदर्यस्नेहात् शत्रुभ्यः सहोदरं प्रतापसिंहंररक्ष। युवावस्थावसरादिव यद्यपि शक्तिप्रतापसिंहयोः परस्परं वैरमीर्ष्याद्वेषादिकमासीत् शक्तिसिंहश्च भ्रातृराज्यं त्यक्त्वाऽकबरसेनायां पदं स्वीचकार च तथापि समुत्पन्नभ्रातृस्नेहः शक्तिसिंहः प्रतापस्य समरादपयानकाल एव पश्चाद्धावतोऽरिसैनिकेभ्यो रक्षां व्यधात्।

यवनानां क्रौर्यम्।

अधिगतेऽपि विजये युवराजसलीममानसिंहयोरकबरस्य च चेतसि प्रससारायं विवेको यत् पराजितोऽपि प्रतापसिंहस्स्वातन्त्र्यं भजते निवसति च राज्यपूतसामन्तसहितः पार्वत्यप्रदेशेषु दुर्गमेषु च दुर्गेषु। अतः पुनरप्येनं पर (स्व) वशं नेतुं सेना शीततौ प्रेषयिष्यते। यवनानां विजयिनो सेना तु बहून् राज्यपूतानहन्। दिल्लीतररवली पर्वतं यावत् पथ्यागतानां राज्यपूतानां च विध्वंसमकरोत्। परस्त्रीसंभोगो निखिलामाबालवृद्धानां च जनानां हननं

यवनानां परोधर्मः। क्षत्रियास्तु एतादृशानि क्रूराणि कर्माणि धर्मादपेतान्येव अङ्गीकुर्वन्ति । परं म्लेच्छधर्मावलंबिनस्तु सर्वाणि निकृष्टानि कर्माणि धर्माविरुद्धान्येव जानन्ति। यद्यपि प्रतापसिंहस्य सहाया जना बहवोऽपि समरे वीरगतिमगच्छन् अन्ये च साधारणाः यवनानां यात्रामार्गान्तर्गताः पौरा बलादेव तैर्यमालयमानीता तथापि मानधना महाराजमनुसरन्तः पुनरपि पार्वत्येषु प्रदेशेषु युद्धाय सन्नाहमाकार्षुः।

प्रतापसिंहस्तदानीं कमेलनगरदुर्गे न्यवसत् । तत्रापि यवनानां सेनान्यो बहून् राज्यपूतान् युद्धार्थमुत्तेजनां कृत्वा न्यघ्नन्। स्वयमपि तेभ्यो मृत्युर्दण्ड प्रायच्छन्। दुर्गस्य च जनराशिं विद्रोहिना केनचित् आबूनरपतेर्देवराजस्य द्वारा विषेण चादूषयन्। महापातक कर्मणानेन प्रतापसिंहो मित्रगणान्वितः पर्वतोपत्यकासु अधित्यकासु च निवासाय शिखराच्छिखरं भ्रमन् स्वातन्त्र्यसंरक्षणाय अकण्टकं स्थानमन्वेषयामास।

### अरण्यवासः—

सम्राडकबरस्तु तं बद्धुं महान्तं यत्नमकरोत्। मानसिंहादतिरिक्तानपि बहून् योधान् पारितोषिकवितरणादिलोभेन संचोद्य नियोजयामास युद्धकर्मसु । फ़रीद्खाननामा कश्चिद् यवनश्रेष्ठो महतोत्साहेनाधित्यकासु प्रतापसिंहस्य निवासस्थानमन्वेष्य— सेनया साकं पर्वतस्थलेषु महाराजसेनामरुणात् । तस्य साहाय्यकास्तु महाराजस्य सहाय्यकारिभिर्निरुद्धाः पुरो गन्तुमशक्ता बभूवुः। प्रतापशाली महाराजः स्वयं खड्गं हस्ते निक्षिप्य फ़रीद्खानं तारस्वरेण कथयामास। "यवन हतक! गच्छ, अकबरं ब्रूहि, नाहं मानसिंहो येन भगिनी त्वयि समर्पिता तव सभायां च मानं लब्ध्वा राज्यपूतवंशः कलंकितः। परन्तु पावनसिसोदियावंशाधिकारिणो मम यावदीश्वरः सहायकारी न तावत्कोऽपि संसारेऽस्मिन् मत्तः स्वातन्त्र्यमपहर्तुमधीश्वरः स्यात्॥"

फ़रीद्खानस्तु निखिलमप्येतद्वृत्तमकबराय निवेदयामास यच्छ्रवणात् सोऽपि खिन्नः क्षुब्धचेताश्च बभूव। तं च बद्धुं विविधान् उपायान् चिन्तयामास। विस्मिताश्च ते देहलीपतिनाकबरेणसहिताः सर्वेऽपि यवन नायका वीरसिंहं महा प्रतापिनं मेवाड़ाधिपतिं स्वायत्तीकर्तुमक्षमा बभूवुः। वनवासिभिश्च राज्यपूतपुत्रैः संसेव्यमानो महाराजा स्थाने कस्मिंश्चित् शत्रूणां महावेगवतां आक्रमणस्य भयमधिकमेव क्लेशकारि जानन् अन्यैर्वनचरैः प्रेरितो याचितस्तेषामेव निवासस्थानमाजगाम। क्वचित् २ च परिवारसमेतां महाराज्ञीं साकमेव अनयत्। शत्रुभिरासादितात् तस्मात् २ देशात् स्वकुटम्बमन्यत्र प्रेषितवान्। अतिशयेन प्रेम्णा वनेचरास्तं महाराजं सर्वदैव साहाय्यमकुर्वन् असन्तोषयंश्च।

( सावशेषः )

---

## स्वामी रामतीर्थः

( ले०—पं० जगन्नाथः जाडू )

अयि ! गुणिगणगणनारम्भेऽग्रगण्याः मान्याः !
समग्रविद्यापारावारपारीणाः !
सदसद् विवेक कुशलाः !
गीर्वणगिराभ्युदयमभिलषन्तो महासूरयः !
कार्यज्ञाः सहाध्यायिनश्च !

यद्यप्यज्ञानावृतचेतःसु अल्पज्ञेष्वपि मर्त्येषु मध्ये नास्ति दुर्ज्ञेयं स्वामिनो रामतीर्थस्य चरितम्, तथापि मनुष्यमात्राय श्रेयस्करीं गिरं वक्तुमिच्छा मां मुखरीकरोति। तत्रैवं सत्यादौ सुखदुःखाधारभूतजगतोवर्णनमनुल्लङ्घनीयम्।

इहापारनिःसारसंसारार्णवेऽप्रतिपत्तिग्रस्तमानसेषु मर्त्येषु निर्वाणरूपामन्दानन्दकन्दसद्भावः कदाविर्भविष्यति—इत्यस्यां

चिन्तायां समोश्लिष्टात्मानः केप्येवं महात्मानः रमण्यादिविषयेभ्यो जलबुद्बुदावलिवत् स्वभावभंगुरेभ्यः सम्पद्भ्यश्च परावृत्ताननाः केवलं भगवदाराधनायां समासक्तचेतसो जगति दरीदृश्यते।

भगवदाराधनायां दत्तमनस्केषु पूर्वजन्मानुभवजनितभगवद्विषया विलक्षणा रतिर्यदृच्छयैवाविर्भवति। प्राप्तावसरे महापुरुषास्पदमधिगच्छन् स्वधर्मोपार्जितयशसा धवलयन्निव समग्रं भूमण्डलं तत्रामरतामाधिगच्छति।

अद्य यावत् स्वयुक्तगुणाभिव्यक्तमहापुरुषलक्षणाः अनेके धर्माधारभूताः देहमात्रोपदर्शितमनुष्यधर्मा मनुजाः संबभूवुः, तेषां रामतीर्थ, इत्याख्यः एको महात्मावर्तिष्ट। यस्य स्वभाववर्णनं मयेदानीमुपक्रम्यते।

आसीत् समस्तनगरमौलिभूते मुरादाबाद इति नाम्नि नगरे सारस्वतवंशजः स्वनियमतपहोमचान्द्रायणादि तत्परस्य हीरानन्दस्य द्विजन्मनस्तीर्थरामाभिधस्तनयः। बाल्यावस्थायामेवजननीविश्लेषमापन्नं हृद्याकृतिमभिव्यक्तमहापुरुषलक्षणं सकल गुणाभिरामं तनयं जनक एवापोषीत्। ततो विद्याध्ययनार्हं तं निरीक्ष्य शुभायां तिथौ गुरुजनानुज्ञातः स्वावासान्तिकस्थायिनि पाठालये विद्यामपाठयत्। तदनु कतिचिद्वासरातिक्रमणे समग्रेविद्यालये परीक्षायां प्राधान्यमधिगम्य स्वमत्यनुरूपं छात्रवृत्तिं पारितोषिकञ्चालभत।

नैतत् चित्रम्—यतो हि स्वाधीनकुशलानां सद्धीमतामन्यापेक्षया विनैव पूर्वजन्माधीताः निखिलाः विद्याः यदृच्छयैव प्रादुर्भवन्ति। केवलं हि ते मर्यादापालनाय वैधेयजनवत् विद्याध्ययनाय शिष्यवृत्त्या गुरुसन्निधौ सप्रश्रयमुपयान्ति।

यथा षोडषकलात्मकः कौसल्यानन्ददायी स्वोन्मेषनिमेषाभ्यां जगतः प्रलयोदयं सम्पादयन् स्वदर्शनेन दुस्तरं भवाब्धि

तारयन् रघुवीरः दाशरथिः सर्वेश्वरः सन्नपि तद् दर्शनलालसकेभ्यो-वशिष्टकौशिकादिब्रह्मर्षि राजर्षिभ्यो मुनिभ्यः उपदेशं जग्राह ।

सः खिन्नाङ्गः सन्नपि मानसिकशक्त्या सहनशीलोऽगणित शारीरिकदुःखचिन्तः परोपकारी सज्जनवत्सलः मातापित्रोः निदेशपालकः स्वाभिलषितसाधनतत्परोऽवर्तिष्ट । अनेकधा च सोऽसंख्यान् वासराननाहारेणातिवाह्य तत्रापि च सहनशील-त्वात् विकसितनिजाननारविन्दो बोभूयते स्म । निर्मूल्यं जीवनमव-गत्य ज्ञात्वापि विना कर्म नास्थात् । 'धर्माथकाममोक्षाणां शरीर साधनं महत् ।' इत्यस्मिन् वचसि श्रद्दधानः स्वस्वास्थ्यसंरक्षणे तेन महान् यत्नोऽकारि ।

प्रतिक्षणमध्ययने स्थास्थ्यरक्षणक्षमे व्यायामे च व्यग्रीभूय स्वमनोऽनुकूलं सर्वं कार्यजातमकरोत् । कदापि खट्वां नाधिशेतेस्म । हिंसकं मांसाहारिणं असत्पथवर्तिनं दुष्टप्राणिसेवितमसत्यसन्धं मिथ्यावादिनं परदुःखदानदक्षं जन्मिनं पापात्मानममन्यत । निदाघे प्रखरांशुचण्डांशोः रश्मिभिरुद्वेजितः संस्तत्कालोपयोगयोगिणी द्वे वसनी केवलं देहापिधानायैवाकलयत् । स्वागारे नग्नमस्तकोऽ-न्यत्र गमनावसरेऽल्पमूल्यमुष्णीषं परिदधति स्म । स वहून् प्रकृत-जनकर्मसहायभूतान् ग्रन्थानगणितस्वोपदेशदार्ढ्योऽरचयत् । तत्र लिखितं सकलमादौ स्वयमेव विधायान्यानपि ततः तत्कर्मणि नियो-जयति । ततो विवाहितोऽप्ययापत्योत्पत्त्यै निर्विण्ण एकधाऽ-खिलक्षणिक सांसारिकदुःख-चिन्तादीन् तथापि पुत्रदाराणा-मन्येषाञ्च समीपसम्बन्धिनां सहोदराणां मोहजालमुत्सृज्य तपस्तप्तुं हिमालयोपत्यकायामगात् । 'पञ्जाप, इत्याख्ये प्रख्याते देशे प्रथममेतादृश्यं सकलगुणान्वितमभिभ्यं नवयुवकं वैराग्याक्रान्तं विलोक्य तत्रत्यः सर्वे बालवृद्धाः परं विस्मयमापुः ।

अनन्तरं हिमालयोपत्यकायां तपस्यन् केवलमाध्यात्मिकशक्ति-मवर्धत । उदासीनोऽपि जनः तं द्रष्टुमुपगतः सत् ओंकारमुखरित

तन्मुखावलोकनेनैव हर्षोत्फुल्लवदनारविन्दः संभवति स्म ! संशयावृत्तचेतसं जन्मिनं मृदुलैः मनोविनोदकारिभिः वचनैः संशयछेदमाचरति स्म ।

उपदेशदानावसरे भगवद्भक्त्यतिरेकात् स्वलोचनेभ्यो गलिताश्रुधारासन्तानो निर्विकारवदन आसीत्, मुखाह्लादेनैव तस्य तेजस्विता व्यक्तिं भजते । यमुनातटे व्याख्यानावसरे तद्व्याख्यानश्रवणसञ्जातकौतुकाः सिकतातलासीनाः अगणितशीतत्वादिभिः कष्टप्रदानि दुःखानि भजन्तोऽपि श्रोतारोऽशृण्वन् ।

तेन नानादेशेषु गत्वा बहुधा व्याख्यातम्, 'अमरीका, मधुपुर, इत्यादिषु वेदान्ततत्त्वमुपदिश्य तत्रत्यान् यूनः युवतीः जरा युतानपि शिष्यपदव्यन्तर्गतान् चकार ।

यत्र यत्र तेन व्याख्यातम्—तत्रत्याः सर्वे नागरिकाः तं मार्गयितुं गिरिषु अद्रिकुक्षासु अटवीतोऽटवीषु च परिभ्रमन्न आसन् । तदनन्तरं तदनुपलब्ध्या खिन्नमनस्काः विह्वलचेतसः ओंकारमुखरितमुखाः ते पिञ्जिरस्थ शुकानपि 'ओं' इति शब्दमध्यापयामासुः ।

मिश्रदेशेऽपि गत्वा तत्रत्यानन् यवनवृन्दान् पारसभाषयोपदेशं चकार । तदुक्तिं निशम्य सर्वे यवणगणाः तादृशहितहृद्यलाभप्रदवाक्वक्तरि विसिस्मिरे । क्षीरपानं विधाय ब्रह्मविद्याध्ययनानुशीलनमकरोत् । तदाश्रमो विश्वमुटजावृत्तः चित्ताकर्षणक्षमविचित्रवर्णघटितहरिणः, अग्निहोत्रधूमसुगन्धितखेचरमार्गः आसीत् ।

किं बहुना अथ कार्तिकशुक्लामावस्यायां तिथौ त्रयस्त्रिंशद्वर्षदेशीयः मध्यन्दिने पतितपावनसमर्थगङ्गोदके स्वर्गसुखमनुभवितुं पुण्यगेहं स्वदेहमत्याक्षीत् ॥

———

# उमर खैयामस्य रूबायीनामनुवादः

( ले०—पं० गिरिधर शर्मा, झालरापत्तनं राजपूताना )

सद्वाग्वैभवसंस्कारा नानाभाविकभाविता ।
सुवर्णभूषणा 'श्रीः' स्यान्नित्यानन्दप्रदा सताम् ।

## *चतुष्पद्यः

(१)

प्रभाते मे सुरालयतः समायातो ध्वनी रम्यः ।
अये मदमत्त मुग्धात्मन् त्वमुत्तिष्ठ त्वमुत्तिष्ठ ॥
प्रकुर्वः पानपात्रं नौ स्वयं तावत् सुधापूर्णम् ।
न यावत्तत्स्वयँ ल्लोके भवेत्पूर्णं महालयतः ॥

(२)

सुरापात्राधरं चुम्बन् समैच्छन् मेऽधरोऽशोकम् ।
वयोवृद्धिं तनुस्फूर्तिं हृदुल्लासं सबिब्बोकम् ॥
मदीयोष्टेऽधरं दत्वाऽगदन् मन्त्रं सुरापात्रम् ।
सुरा पेया सुरा ! यातः पुनर्नायाति ना लोकम् ॥

(३)

न विक्रेष्याम्यहं मुक्ताकलापं स्वल्पमूल्यैः स्वम् ।
व्यथां त्वद्विप्रयोगीयां सुवर्णैः न प्रदास्येऽहम् ॥
तव द्वारोद्भवं धूलेः कणं दास्ये न साम्राज्यैः ।
न तेऽलकजं कुटिलकेशं महीस्वस्त-प्रदास्येऽहम् ॥

(४)

महारण्यः स्थलं विजनं तरुच्छाया शिलाखण्डः ।
घटः सजलः सलवणोऽल्पो यवीयो रोटिकाखण्डः ॥
मिलेयुश्चेत्त्वया नित्यं मधुररागेण गायन्त्या ।
अलं मे सर्वदानन्दाय वाञ्छयो नापि स स्वर्गः ॥

---

* विश्वविख्यातकवेः उमरखैयामस्य रुबायीनामनुवादः ।

श्रीः 

# ❀ प्राक्तन शिक्षावस्था ❀

[ ले०—पं० प्रेमनाथः हण्डू ]

श्रीमन्तः ! सभ्याः !!

१—नैतदज्ञातविषयमितिवृत्तविदाम्—यत्—उपस्थिता हि साम्प्रतमखिलभारतवर्षमधिकृत्य सूक्ष्मातिसूक्ष्मपरमाणुरूपेण समस्त-भारतपुरीवर्तिनी विचित्रैका समस्या । सा हि सकललोक निर्णीया सर्वत्रभारते दृश्यमाणा वर्णसमस्या। यतो हि मनुष्य-जातीनां, सभ्यतायाः, भाषाणाञ्च, नास्त्येतादृशी विभिन्नता वर्तत-अन्यत्र कुत्रचित्, यादृशी भारतवर्षे। यूरूपे ( पाश्चात्यदेशे ) अपि-स्यात्तत्, परं श्रेणीसमस्यैव सा नतु वर्णसमस्या। परं तैरपि सा सुखेनायासेन वाऽपुनर्वर्तितव्येन क्रान्तिद्वारा निर्णीता।

अतश्चिन्त्यताम् । इयत्कालमस्याः निर्णयो न भविष्यति तावत्सकललोकस्य कर्मासाफल्यं कृच्छ्रत्वमेवैधिष्यते। यतो हि-स्वधर्मे निरताः सन्तः स्ववर्णमनुवर्तमानाः प्राचीनाः स्वकृतिषु कृतकृतिनोऽभूवन्। परमिदानीं पाश्चात्यशिक्षोच्छिष्टैः स्ववर्णधर्म-भ्रष्टैः यथोक्तलोकाचार वञ्चितैः साम्प्रतिकैर्नूतनैर्युवभि र्नकिमपि साधुकर्म क्रियते, न चापि तैः किमप्यलौकिकं कर्मान्तरेणास्मत्पूर्व-जानां ग्रन्थादि-शिलालेख-साहाय्येन साध्यते। साध्यतेऽपि यत्कि-ञ्चित्तत्रापि तद्बीतवपनं पूर्वजानामेव ज्ञातव्यम् । एवञ्चेन्नस्यात्तर्हि कथं न प्राचीनानामिवाधुनिकैर्भारतीयैरपि जगद्विजयिनी कार्यनिष्प-त्तिर्निष्पाद्यते। केवलं हि ते विधर्मिशिक्षया विधर्मेतिहासमेव स्व-पुरावृत्तं मन्यन्ते। परमस्माकमितिहासोऽन्येभ्यः सर्वेभ्यइतिहासे-भ्यो विभिन्न एव। तेन वस्तुतः त एव नरपुङ्गवः येहि विधर्मिशि-क्षया प्राप्तनैपुण्या अपि स्वधर्मपुष्टिमेव कुर्वन्ति।

ज्ञायते च—"स्वधर्मेनिधनंश्रेयः परधर्मो भयावहः" इति महाजन वाक्यं तेषां कर्णकुहरेऽपि गतं न स्यात्। अतो—यथास्यात्तथा स्व-वर्णधर्मौ शिरसा स्वीकार्यौ "अस्तु" तथैव—

२—प्रत्येके न भारतस्य-प्राक्तनशिक्षारीतिविचार अवश्य-मिदं वाक्यद्वयं स्वमनसि निधातव्यम्। यज् जन्तुर्जन्मण्यशरण-परावलम्बित्वाभ्यामवश्यमेवासक्तो भवति। अतः—शिक्षाऽव्या-पारेण स्वावलम्बित्वं, लोक सकलकर्म-विधातृत्वञ्च कुत्र यावत्तेन प्राप्यते। अपरञ्च तस्य आहोस्वित्—तत्समाजस्य वा निश्चित-ध्येय प्राप्तिरपि कुत्र यावत्। अतः—परीक्षाभ्याभाभ्यां द्वाभ्यां सर्व-शिक्षापद्धत्यालोचना साधु सम्पद्यते।

यस्मिन्कस्मिंश्चास्मद् प्राक्तनभारतविचारकाल एव सुस्पष्ट-तया कतिपयवर्चांसि स्वयमेव प्रादुर्भवन्ति। यत् प्रथमन्तु तदानी-मासीद्देशस्य धन-धान्यपूर्णता, सर्वलोकस्य सुगमवृत्ति निर्वाह्-कता, दारिद्र्यादि दुःखाल्पत्वासहिष्णुता, विशेषेण च सर्वजनानन्द-कता प्रस्फुरमाणा।

एवं नासीत्तदानीं जीवन संग्रामप्रश्नस्याविर्भावः। चेत्स्या-दपि-परं नह्यत्यधिकगम्भीरस्थितिभाजकः। तेन वास्तविकनिदान-मस्य देशस्योर्वरतैव। अपरञ्चान्यद्यद्दरीदृश्यते—सर्वजनाध्यवसायो हि सः पारमार्थिक लाभमेवापेक्षते। अन्यच्च-ज्योतिषन्यायविज्ञानादि शास्त्राणां स्याच्चेदासीत्तदानीमुत्पत्तिः परं प्राथमिके काले महत्त्व-पूर्णत्वं तादृग् नह्यभज्यत तैरन्तरेण धर्म साहाय्यम्। एवं नहि किञ्चि-देतद्विद्यते धर्मविषयकचित्तवृत्ति र्हि कियती प्रचारवती विस्तार-वतीचेति। केवलं गगनपतिततोयस्य सागरोन्मुखत्वेनेव सर्व आचार-विचारा दृष्टिविषयाविषयधर्मं एवावसाने लीनतामभजन। धार्मिकोन्नतिरपितन्नासीत्संभावनीयैव। एवं—यत्र जीवन संग्राम विषयकानुयोगाः प्रकृत्या स्वयमेव निर्णीताः स्युस्तत्रोचितारिक्त स्यानर्घ्यसमयस्याधिक्ये तत्प्रयासे च कावश्यकता मनुजानाम्। अतः प्राक्तन-भारत शिक्षायाः विमर्शन उपर्युक्त वाक्यद्वयासक्तिः परमावश्यकी। यतो हि—

३—साम्प्रतमपि संप्रवर्तते सर्वेषु स्थानेषु साहित्यातिविशालता। केवलं तत्र गगनचुम्बिग्रन्थराशीन्पश्यन्तो वयमित्थमनुमिनुमः। यज्ज्ञानोन्नतिः कियदुच्चास्पदिका। एवं वर्तमानभारतभाषायान्तु स्याच्चेदिमवस्था न हि, परं तथापि तत्र ग्रन्थगणनागण्या, प्रत्युत—प्रतिवर्षं ग्रन्थगणनोत्तरोत्तरविसर्पिणी। तत्र-पुस्तकैः "ज्ञानाधिकता" इति यत्कथ्यते तत्र किमार्यावर्ते ग्रन्थगणना एव ज्ञानस्य निधानम्। दशसंख्याक-पुस्तकाध्येतारो हि पञ्चपुस्तकाध्येतृभ्योऽत्यर्थं ज्ञानवन्तो विचार्यन्ते। यतो हि—आ वर्तमानं भारतभारती-विज्ञानविशारदाः "वयं हि शतसहस्रसंख्याकग्रन्थनिर्मातारः" इति गर्विणो वर्तन्ते। परन्तु—शतसहस्रसंख्याकग्रन्थपृष्ठविपर्यासकविज्ञानविशारदानां ज्ञानानुमानं किं तत्पुस्तकैरेव क्रियते? स्याच्चेदेतदेव तर्हि न्यूटनाः (पाश्चात्यकविः) एव दरीदृश्येरन्। किञ्च तेनापि न हि तत्संख्याकविज्ञानग्रन्थानि विलोकितानि स्युः, भारतभारतीयविज्ञानविशारदैनैकेनैव यान्युद्धृतानि सन्ति। तत्र यद्यपि प्रायः ज्ञानवृद्ध्युद्देशमभिलक्ष्यैव न हि तद्विरचना, तथापि किम्। पाश्चात्य जातिक "लाडबेकन" काले च न ह्येतावती वृद्धिः पुस्तकानामासीत् यावती साम्प्रतं सम्प्रवर्तते। तथापि च निःशेषाणि पुस्तकानि न हि तत्र निःशेषकरणोचितानि, किञ्च कानिचिल्लेहार्हाणि,—चर्वणार्हाणि, निगरणार्हाणि च कानिचिद्वर्तन्ते। एवमेव साम्प्रतिकसाहित्यवृद्ध्या—पुस्तकानि कानि स्पर्शार्हाणि, दर्शनार्हाणि च कानिचित्। तेन च सम्भूतं साहित्यश्रियोवृद्ध्या समालोचनाऽत्यन्तं दुस्तरं कर्म। यदा च निखिलपुस्तकवर्गमुपयोगसाम्मुख्यं भजति, तदा को हि नाम तदुपयोगे सन्देहयति। तेनात्रानुयोग एकः समुपतिष्ठति—यद् यदास्माभिः "इदं पुस्तकं महत्त्वपूर्णम्" इति व्यक्त्यनुरूपेण स्वीक्रियते, तदा तत्परीक्षा निकषेकस्मिन्निक्ष्यते। किं वा तन्महत्त्वं तदुपयोग एव। इति विषयानुरूपेण यत्र शतसहस्रसंख्याकवैशम्योदाहरणानां सत्त्वं वर्तते, अवश्यमेव तत्र किञ्चिन्मात्रं समतायाः-विद्यमानमपि। तत्रापि—समतासम्बन्धिविषयेषु

"मदनदहन" एवेदानीं मनोरञ्जकत्वेन जगत्शास्ता। कवित्रयाणाञ्च वर्णनस्थानम्। अतः—उपाख्यानक्लृप्तभगवत् वेदव्यासवर्णनाविर्भावानन्तरं तद्विषयञ्चालोच्य कालिदासतुलसीदासादयो विचार्यन्ते।

यथा—

( तत्संक्षेप निरूपणम् )—

४—आ सृष्टेः सृष्टिस्थितिपर्यन्तं सुरासुरसंग्रामप्रथा प्रवर्तते, वर्तिष्यते च। इति कतिपयविद्वज्जनमेधा। तत्रासीत्पूर्वकाले दितिवंशोद्भवो वज्राङ्गात्मजः दुर्दान्तो महादैत्यस्तारको नाम। देवैस्तद्राज्ञा वृत्रघ्ना च वंशपरम्परागतद्वेषसद्भावेन तेन देवा आक्रान्ताः। तत्र यथाशक्ति प्रतीकारं कुर्वद्भिर्देवैर्वैरनिर्यातनार्थं यद्यपि चेष्टाऽकारि, परं तत्ताडनेन संत्रस्तमनसो देवाः पलायिताः। अन्ततश्च तत्पराजयस्वीकारदुःखदुःखितैः परमेष्ठिपरामर्शसहायभूतैर्देवैरिति निश्चितम्—अवश्यं भावी हि शर्ववीर्यज-कुमारनेतृत्वेन तारकासुर वध इति। ततश्च तदानीं—सत्यात्मत्यागविरक्तसमाधितं भवं चेद्रूपलावण्यात्मपार्वत्युग्रतपस्यापि नोलङ्घयितुं क्षमेत। नास्ति तर्हि तत्र विशेषकर्मारम्भतया किमप्यद्भुतम्। अतस्तद्विचारमग्नैर्देवैर्निश्चितम्। केवलमनङ्ग एवोपस्थितकर्मदक्षः। ततश्च स शक्रशासनं सहचरमाधवसमेतः कन्दर्पव्रतच्युतिकर्मसंलग्नो मीनकेतनस्तत्तृतीयनेत्रोद्भवज्वलनेन भस्म एवावशिष्टरित्यलं "मदनदहन, कथा-कुञ्जिका।"।

५—अतः परं किं पुनः पल्लवितेन। विस्तारभिया विरम्यते। सर्वस्यादह्लादकरम्। किञ्च तथापि यथास्यात्तथा सर्वदा सर्वैरेव तथाचरितव्यम्—यथा- सर्वैरेव स्ववर्णधर्मतत्परत्वं-प्राक्तनशिक्षारीति प्रवर्तनत्वमासेव्यते। यतो हि—क्षणभङ्गिनि विलक्षणाकारे असारेऽस्मिन्संसारे "धर्मो रक्षति रक्षतः" इति महाजनोक्त्या धर्म एव साररूपो बन्धुः। तथैव नास्ति कोऽपि सः संसारे यस्य मित्रोदासीनशत्रुरूपस्त्रयः पक्षा न विद्यन्ते। यतश्चोक्तं निरुक्तशास्त्रे—

"मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः।
उत्पद्यन्ते त्रयः पक्षा मित्रोदासीन शत्रवः॥" इति।

परमवसाने सर्वं एते ( मित्रोदासीन शत्रवः ) लीनतामेव प्राप्स्यन्ति। यतश्च दासस्य म अनुभवानुरूपकथनम्—

यथा—

प्रभाते सम्प्राप्ते विकसति विभुर्मोहमिहिरः
तदंशत्वेनैव प्रसरति जगत्पुष्कररजः।
ततोऽवागत्वं प्राप्नोति-नरमधुपो गीतिमधुरः
विलीने-शब्दौघे तदिदमखिलं गच्छति लयम।

॥ शन्नो भवतु ॥ इति।

———

## वसन्तवर्णनम्

[ ले०—पं० लक्ष्मीचन्द्रः शर्मा शास्त्री ]

### श्रीभारती विजयतेतराम्

विनश्वरे खलु जगति महामहिम्नो भगवतोऽद्भुत माया-वैचित्र्यं सच्चिदानन्दस्य। तद्वर्णयितुमशक्ता श्रीसरस्वती-लिपिकर्तु-मक्षमा च सुकविनां धीमतां लेखनी तन्महत्वं-ततश्च कथमपि न शक्यते सुकविरजः परमाणुना ईषत्प्रतिभाप्रागल्भ्येन मया, परं तथापि प्रोत्साहितः सुहृद्वर्गैरनुज्ञातश्च विद्वद्भिरभिषिक्तो भारत्याशीर्भिः हर्षोत्फुल्लिततनुर्वर्णयामि सामयिक मर्यादामेवोद्दिश्य किमपि। अहो! बद्धमर्यादो भगवान्—समयमपि विभजते षड्विभागेषु। 'षड्ऋतव', इति नाम्ना व्यवह्रियन्ते ये विभागाः। ते च वसन्त ग्रीष्मवर्षाशरद्शि-शिरहेमन्तप्रभृतयः। आदौ तावदयं विमर्शो यद्भगवता श्रीकृष्णोन भणितं गीतायामर्जुनाय यद् 'ऋतूनां कुसुमाकर' इति किं च ईश्वरां-शत्वाच्चायं ऋतुराह्लादयति किं सर्वेषां नो चेतः। चराचरस्य अखिलजगतः पूर्वदशावैपरीत्यमेव विदधाति अभिनवरससंचारको-ऽयं ऋतुः। अवसाने खलु हेमन्तर्तोः नीरसतरैरपि तरुभिः गवे-ष्यते नैजी प्रकृतिः आविर्भूते च कुसुमाकरे नवरसास्वादकत्वमेवाश्र-

यंति शुष्कतराः वनस्पतयः। कर्बुराणि च कुसुमानि लक्ष्यंते समन्तादारामेषु। एकतो हि उद्घाटितजलयंत्रैः सिंचितद्रुममूलं पिकरववद्द्विगुणितशोभं विकसित विविध स्थलकमलं हर्षयति स्वीयसौन्दर्येणोद्यानम्। अन्यतश्च द्विरेफसंघातैः संकीर्तितं परभृन्निकरैः संकूजितं प्रफुल्लतेतरां पंकजवनम्। ऋतुराजस्वागतकारिभि र्विहंगमैरपि आद्रियतेऽयं कालः स्वीयमधुर रवेण।

विशेषतो हि कश्मीरेषु प्रादुर्भावो पुष्पाकरस्याह्लादकारी। दृष्टिः पात्यते यत्रैव सर्वैः विकसिताः विविधाः मधुकरयुताः नवकिसलयानन्तद्युतयः पुष्पमालयः सहजसौरभेण तर्पयन्ति घ्राणेन्द्रियम्। कुसुमसंपर्क सुरभितो गन्धवह आनन्दयति जनान् राजमार्गेषु॥

नगरान्तराले च वहति पावयन् प्रदेशमिमं वैतस्तिकी धारा। प्रवर्तमानेऽस्मिन् मधुमासे समागच्छन्ति विविधाः मनुजाः बहुप्रदेशेभ्यः काश्मीरिकवसन्तर्तुसुखाप्तये। प्रत्यहमनुसायं संकुचिते सति भगवत्यंशुमालिनि स्वकुलायगामिनां विहगानां संकूजितैः राजतेतराम् विचित्रमेव समयानुकूल्यं मलयानिलसंयुक्तेनानिलेन च। देशस्यास्य सर्वतः रामणिका मधुरजलतटाकान्विता प्रदेशा अलंकुर्वन्ति देशमिमम्। प्रकटीभूते च काले प्राप्तावकाशः प्राणिनां रंजयन् मनांसि समागच्छति पुष्पधन्वा दुन्दभिं वादयन् मलयानिलद्वितीयः। का गणना मनुष्याणां—स्थावरैरपि सत्वमासाद्यतेऽमुष्मिन् समये सरसतामाप्नुवन्ति तृणादिकानि। येश्च बहुक्षीरवत्यः संपद्यन्ते सुरभयः। अगदंकरोऽयं रोगिणामपि समयः। सुभगोऽयं कालः वर्णयितुमशक्यः। समागमनेन पुष्पाकरस्य पूर्वानुभूतदशावैपरीत्यमेव भजते यथा प्राणिनां प्रवृत्तिः। तथैव अन्तस्थमनुत्साहं निलिम्पवाणी प्रचाररूपं विहाय च गीर्वाणवाण्याः प्रख्यापने प्रयासरूपोऽयं नवीनो भावः निधापनीयोऽखिलैः भारतीरसामृतदिग्धैः चेत् तर्हि साधु। स एव च वसन्तानन्दानुभवः सर्वगुणोत्तरः। अद्यतने च काले शीताम्बुवाहिभिः

वेपथुः संपद्यते पयोमुग्भिः काश्मीरस्थप्राणिनाम् प्रादुर्भूतेऽपि मधुमासे। अतोऽहं सर्वोत्कृष्टमेव मन्ये काश्मीरिकं वसन्तर्तुम्।

किं बहुपल्लवितेन—

निश्शेषभृङ्गालियुतैः सुपुष्पैर--लंकृतं रंजितसर्वलोकम्।
वन्दे प्रफुल्लाम्बुजवृन्दगन्धै—रामोदितं पुष्पभवं वसन्तम्॥१॥

विकसितफलपुष्पः कृष्णमेघाम्बुवर्गैः
कृतद्विगुणितशोभः फुल्लकंजातिवृन्दैः।
पिकगणपरिलापैः शब्दितः सत्कृतश्च
किमयमिह वसन्तः राजते निर्विशेषम्॥२॥

———

## काश्मीरिको ग्रीष्मः

[ ले०—पं० शिवनाथशास्त्री साहित्यभूषणः साहित्यमणिः उपदेशकः भा० ध०
महामण्डल, श्रीनगर काश्मीर ]

पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्द्धे पुरीषिणम्।
अथेमे अन्य उपरे विचक्षणं सप्तचक्रे षळर आहुरर्पितम्॥
(ऋ० २, ३, १६, २, )

मान्याः श्रीमन्तः! विदितचरमिदं वेदविदुषां उत्सर्गतएव यत्प्राकृतिके विश्ववैचित्र्ये लवत्रुटिनिमेषादियुगात्मककालचक्रबंभ्रमणेन कति मन्वन्तराधिपा मनवो गता आगमिष्यन्ति च। यतो ह्यनादि-पुरुषेण भगवता ब्रह्मणाब्रह्मणि "सूर्याचन्द्रमसौधाता यथापूर्वमकल्पयत्। दिवं च पृथिवीं चान्तरिक्षमथो स्वः॥" इत्यादिस्वीयनिःश्वासेन निष्पादितम्। तस्मिंश्चागमप्रसिद्धे कालचक्रे मासर्तुसंवत्सरास्तेषां च परिवर्त्तनक्रमतारतम्योद्भूत—तत्तत्कालानुरूपशीतातपवर्षाचयापचय-दर्शनेनानुभवेन च स्वयं समीक्षामहे षण्णां ऋतूनां गमनागमनम्। तत्र चागामि ग्रीष्मर्तुवृत्तान्तं कविभिर्यथावर्णितं सम्यगनुभवन्ति सर्वे भारतीया जना काव्याध्ययनपरा भवन्तोऽपि।

परं त्रिविष्टपोपत्यका भारतवर्षान्तर्गतापि इयं काश्मीरभूमिः काव्येतिहासनिरूपितभारतीयग्रीष्मवर्णनानुसारिणी ग्रीष्मे नास्तीति प्रतिभाति मे त्रिविष्टपगुणगुम्फितत्वात्, "काश्मीराः स्वर्गसदृशाः" इत्युक्तदिशा च।

ग्रीष्मर्तौ सर्वेषु भारतीयदेशेषु रविप्रखरकिरणैर्भूमिर्निःशाद्वला लुञ्चितकेशा कामिनीव, वृक्षा निष्पत्रा धानुष्का इव निस्तब्धाः, उपवनानि जनहीनानि श्मशानानीव जाज्वल्यमानस्थलानि नदीनदवापीकूपतडागानि ऊष्मायमानजलानि स्वल्पजलानि च, विपण्यो जनगमनागमनविरहिताः पर्यन्त कान्तारमार्गा इव, पक्षिणश्च तृषार्ता निष्कलरवा मूका इव च्छायामात्रकांक्षिणः, फलानि नीरसानि, दरीदृश्यन्ते। किंच जनाः संतापतप्ताः स्वस्वव्यवहारकरणासमर्थाश्चातका इव वर्षागमनकांक्षिणः स्वस्वगृहाधस्तनशालासु अप्राकृतिक स्थानस्थापितशीतजलकुम्भप्राणाः, स्वेदाम्बुनिर्गमक्लान्ताः, आर्द्रीकृतोत्तरीयाधरीयवस्त्रधारिणः शय्यापतिता लोहकारभस्त्रीप्रवृद्धश्वासोच्छ्वासा भवन्ति। राजकीयपाठशालासु ग्रीष्मावकाशो भवति। कार्यालयेषु प्रातःकालिकमेव कार्यजातं प्रचलति। सर्वथा ग्रीष्मर्तौ न कुत्रापि शान्तिः सन्तापेन जनानां न च भोजनादिद्रव्येषु भवति कोऽपिस्वादः। केवलं व्यजनपरिचालनपरा रात्रिन्दिवं सहाहाकारं सफूत्कारं सशूत्कारं सामान्यजनाः स्वस्वकर्मफलभोगभोक्तारो मर्त्या यापयन्ति निदाघदिवसान्। ये च सुकर्माणो धनिनः स्वर्गसुखभोगयोग्यास्ताद्दशं ग्रीष्मसन्तापं न द्रष्टुं नापि च सोढुं वाञ्छन्ति। तादृशानां तेषां कृते "स्वर्गद्वारमपावृतं" इत्युक्त्या त्रिविष्टपावासः पृथिव्यामेव काश्मीरभूमिवासः। यतो हि ऐश्वर्यवतां महोदयानां कृते क्षुत्तृष्णाविरहिता स्वर्गभूमिरकिञ्चित्करा सति भूमौ त्रिविष्टपे काश्मीरमण्डले सर्वैश्वर्यभोगयोग्ये।

कश्मीरेषु ग्रीष्मः—सर्वारामोपवनेषु पत्रपुष्पभरितवृक्षोपरिपारावतानां कलरवो भरद्वाजानां रटनं खञ्जनानां कूजनं चाषाणां

क्रोशो भृङ्गानां झंकारो दार्वाघाटानां ठुक् ठुक् इति शब्दः कृकवाकूनां सप्लुतस्वररवः कलविङ्कानां चिर् चिर् इति स्वरः कोकिलानां कूजनं कीररवश्चकोरकलहंसकुररहंसचीरीरवश्च सर्वतः श्रूयते।

भूमिस्तु भूरिशाद्वला कृतनीलोर्णापटा (मखमल) स्तरण शाद्वलाग्रेषु प्रालेयकणिकाभिः समुक्ताफलेव भाति। सर्वेषूद्यानेषु भव्यपालीवत-चिरा-चूर्णारुकाडू-आदिफलानां प्राचुर्यं भवति। कपित्थदाडिमी वृक्षेषु पुष्पविकासो भवति। विशेषतो ग्रीष्मकाले एव काश्मीरेषु नद्याः पूर्णजलाभवन्ति। सरांसि पूर्णस्वच्छजलानि पद्मनीलोत्पलेन्दीवर-कह्लारहल्लककैरवपुण्डरीककोकनदपुष्पवन्ति जलनीलीभाञ्जि च। "नशात शालामार" इत्यादि नामान्युपवनान्यलौकिकानेकपुष्पवन्ति विद्योतन्ते। देशान्तरागतनानाजातिजाता आढ्याः स्वस्वदेशस्थनिदाघतापशमनायात्रागमिष्यन्तीत्यतस्तेषामसंख्यानां यातायातेन सदैवात्र महोत्सव इवोपलक्ष्यते। श्रीनगरे वितस्तायां केचिदक्षोटकाष्ठनिर्मितदर्शनीयवस्तुसंभाराः केचन रूप्यनिर्मितपात्रप्रचयोऽन्ये नानावर्णात्मकाश्मकृतहृद्यपात्रादिनिवहा अन्ये कौशेयराङ्कवादिश्लक्ष्णनानाविधवासोभिर्भरिता अपरे सिंहश्वापदादिवानेयपशुचर्मसंघा नौकासु इतस्ततो भ्रमणेन कृतक्रय्याः क्रीतॄन् दर्शयन्ति स्वस्वभाणगाघारान्।

यात्रिकानां मध्ये केचिज्जलयात्रालग्नचित्रा अलौकिकजलवायु शोभिते वराहमूल (बारामुल्ला) प्रदेशे बाण्डीपुरे उल्लरमहासरोवरे मानसबलसरसि, गन्धर्वबले नारायणबाग़े वा सिन्धुनद्यां सोमबलेशादीपुरे मूलिकागुण्डे शालटेंगप्रदेशे सोनावारप्रदेशे पद्मपुरे विजयेश्वर प्रदेशे खनिबले वा वितस्तायां (झेलम) महानद्यां शुल्कगृहीतेषु (हाउसबोट) नौगृहेषु ग्रीष्मदिनानि सकौतुकमतिवाहयन्ति। स्थलयात्राभीप्सवोऽनेकारण्येषु "नाबुगनय" इत्यादिनामसु विशेषतश्चन्दनवाटिकायां (चन्दनवारी) पहलग्रामस्थले अैशमुकामे अच्छबल-कुकरनाग-गुगज्यपथर-कौंसरनाग-वेरीनाग-गुलमर्ग-सुनमर्ग इत्यादि नामक सर्वरोगहरस्थलेषु वस्त्रगृहेषु (खीमा) निवसन्ति। ये चोभय-

प्रदेश विहारासक्तास्ते श्रीनगरस्थिते कारण्डव प्लवकुकुभवर्तिकादिना-नापतत्रिशोभिते डलसरोवरे चिनारबाग़े नसीमबाग़े च तिष्ठन्ति। आदित्यवासरे निशातशालामारादिनामकेषूपवनेषु पतिगलार्पित-पाणिपद्माः सहस्रशो हूणाङ्गनाः पीत्वा भुक्त्वा चरन्ति, उपवनशोभां च द्विगुणयन्ति। नागरिका जना अपि मृत्ररि (मोटर) टांगा नौकाद्वा-रेण राजकीय कार्यालयेष्ववकाशवशाद् गन्धर्वाप्सरसोपशोभिता-रामाभिरामणीयक दर्शनार्थं कार्यशतानि च विहाय व्रजन्ति। किंच काश्मीर श्रीनगरेशा अपि डलसरोवरमध्यसंपादितं कपोतालयं (कोतरख़ाना) देशं बहुदिवसावासेन शोभयन्ति। केवलमनिर्वाच्या सायंकालिकी जलक्रीड़ा गगरीबले विदुषीणां पाश्चात्य रमणीनाम्।

किं बहुना कालेऽस्मिन् स्वर्गस्य काश्मीरस्य च नान्तरीयकत्वम् विहाय नगरमीदृशमुन्मत्तेन बिना न कोऽप्यभिलषति, वसितुं वासा-यितुं वान्यत्र।

किं च घर्मसमये धूलिमलिनगृहेषु शयनागारेषु निशाचरा रक्तपाः पिस्सू यस्कुण खटमल नामानोऽसंख्याः क्षुद्रजन्तवः स्व-कार्यनिपुणा भुक्ताहार परिणामभूतं रुधिरं सूचीमुखैस्तुण्डैरास्वाद-यन्ति तद्गृहमेधिनः। यथा ते प्रातरेव सहाहाःकारं नदीकूले सवि-स्फोटं दर्शयन्ति स्वदेहं निमज्जन्ति च जले तद्दाहनिवृत्त्यै प्रातः स्नानाय च। बहिरागतास्तु सतैलेन (जनरल रोड) बृहन्मार्गेणैव विशन्ति निविशन्ति च। अतस्तेषां कृते बहिर्मार्गवन्मध्यनगर-मार्गा अपि।

---

## कश्मीर-राज-तरङ्गिणी

### पूर्वावशिष्टा

(गोविन्दराजानक शास्त्री एम० ए०)

मन्यसे चेत्तदात्मानं गोपय त्वं वने क्वचित्।
यावत्पुनरहं शत्रून् साधयामि हितं तव॥
शुभमाप्य जनाः सर्वे वशमायान्ति सत्वरम्।

प्रार्थयिष्यन्ति क्षिप्रं मां सन्धिं कर्तुं त्वया समम् ॥
तथास्त्विति वदन् भूपो राजचिह्नं धनमपि ।
न्यस्याली चक्कगेहे स प्रतिकूलविधिस्ततः ॥
अपास्य सर्वं कर्तुं स जगाम कालक्षेपणम् ।
तूर्णं दुर्गवनोद्देशान् दुःखेनोद्विग्नमानसः ॥
राज्ञि प्रचलिते तस्मिन् भुक्त्वा क्ष्मां हायनद्वयम् ।
आसन्नराजकास्तावत्काश्यपीभूमिजा जनाः ॥
अथ लुहरचक्कादिज्येष्ठश्रेष्ठैः सभा कृता ।
संमन्त्र्य च कृतो राजा सैदमोभारकाभिधः ॥
प्राज्ञो मधुरया वाचा रूपेणाप्रतिमेण च ।
अभूदानन्दो लोकानां सुधांशुरिव सर्वथा ॥
स शान्तो वैक्रमे वर्षे वस्वद्रिरसचन्द्रके ।
हर्षेणोत्फुल्लनयनो बभूव काश्यपी नृपः ॥
सिंहासनमधिश्रित्य सैदः स शेखराङ्कितः ।
सचिन्तोभूऽदूद्दष्टरमाविस्तारः सुगणान्वितः ॥
ध्यायन्नसारतां प्रावृणमेघकल्पस्य चेतसा ।
भवस्यास्थिरतां गोनन्दादींश्च राजशेखरान् ॥
यौवनं धनसंपत्तिं मन्वानश्चपलामिव ।
प्रभुत्वमपि भूपालो निमग्नो दुःखसागरे ॥
कलत्रमित्रपुत्रादीन्मंत्रिणो बान्धवानपि ।
मायाविलासरूपान्वै मेने मिथ्यैव पार्थिवः ॥
क्वाहं राज्यं किमेतद्धि कश्चायं मे मतिभ्रमः ।
इति चिन्तापरो भूपो वैराग्यमाप सत्वरम् ।
गृहीत इव तत्रैवमकालधूमकेतुना ।
पुराचीन नृपोदन्तं दुःख मूलमचिन्तयत् ॥
ततो रत्नान्यनर्घाणि धनं हेमापि भूमिपः ।
निर्विण्णो भगवद्भक्तो विप्रेभ्यः प्रत्यपादयत् ॥

प्रवर्तितास्तु याः प्रब्रराजभिस्तु कुनीतयः ।
प्रतिषिद्धा नृपालेन तेन कश्मीरमण्डले ॥
इत्थं प्रियंवदो हर्षप्रदो ब्राह्मणपूजकः ।
स्वप्रजारञ्जनोद्युक्तो बभूव क्षितिनन्दनः ॥
षण्मासानतिक्रम्याथ सुखेनालब्धवृत्तिभिः ।
आत्मं मन्यै द्रूह्यते स्म ज्येष्ठश्रेष्ठैः स राष्ट्रियैः ॥
पुनर्योसिभशाहं ते चोदयन्ति स्मचासकृत् ।
साध्वाचारपरिभ्रष्टा धूर्ता राज्यजिघृक्षया ॥
साहाय्यमाप्य पार्वत्यनृपाणां वञ्चनापराः ।
योसभं चोदयामासुर्युद्धाय कृतनिश्चयः ॥
विधाय सज्जां स्वां सेनां यो सभो जयकांक्षया ।
नृपं भरतलाग्राममुन्मूलयितुमागतः ॥
सैदोऽपि भीतः स्वन्दाख्यावसथे दैवचिन्तकः ।
चतुरङ्गं वीरभटाधिष्ठितं सन्न्यवेशत ॥
प्रजिघाय च योसभसमीपे विनयान्वितः ।
दावोदमीरहस्तेन सन्धये लेखमिष्टकृत् ॥
प्राप्य लेखं योसभोऽपि दृष्टवान् सान्त्वनान्वितम् ।
राजन् ! राज्यं तावकीनं देशश्च गुणिनां वर ॥
हास्यभावान्मया गुप्तं नत्वहंकारवृत्तिना ।
भीतेन त्यक्तो भवता देशानामुत्तमस्त्वयम् ॥
स्वप्नजाल इव मायाभ्रमभूतेऽस्थिरे भवे ।
किं फलं स्याद्रणेनैवासंख्यप्राणापहारिणा ॥
तस्मात्सिंहासनं स्वीयं कथं नाङ्गीकरोषि त्वम् ।
श्रेयान्सन्धिर्न वैरं स्यात्तुल्ययोरावयोर्मिथः ॥
दासोऽहं त्वं प्रजापालो भव मद्वचनाद्विभो ! ।
लेखं दृष्ट्वा बुद्धिमत्तामावेक्ष्य सन्धयेऽथ सः ॥
तदन्तिकं सुतौ याकोबीब्राहीमौ स प्राहिणोत् ।

मोलाहसनदावोदाभ्यां साकं तौ गतौ तदा ॥
अपि गन्तुं स्वयं राजा तत्समीपमियेष सः ।
परं महम्मदेव्दालभट्टौ तमूचतुर्नृपम् ॥
राजन् ! प्रतारणा जालेनास्य बद्धो न स्याद्भवान् ।
किमर्थं लघुतां प्रापयामः स्वात्मानमेव यत् ॥
यामोऽस्य शरणं भीता इवाज्ञा वीरपुङ्गव !
लेखार्थं सुविचार्यैवं जगाद च कृताञ्जलिः ॥
दावोदमीरो राजानं सैदात्प्रत्यागतस्तदा ।
न जाने भूप ! कोऽर्थोऽस्य सन्तापस्य खलस्य वै ।
आकारैरीङ्गितैर्गत्या विकृत्या लक्षिताशयः ॥
निरुपायतयोद्विग्नोऽयं सन्धित्सुस्त्वया समम् ।
न च प्रेम्णा सुप्त इव तिलित्सः कुटिलाशयः ॥
तावकीनं मनो जैवातृकवन्निर्मलम्परम् ।
पीतं स गाहते नूनं सर्पस्येवाहितुण्डिकः ॥
इत्येवं बहुधा क्रूरो योसभं क्रोधतत्परम् ।
गीर्भिः प्रज्वालितशक्तिं ज्वलनमिव तं व्यधात् ॥
प्रावृड् जलदवद् घोरः कृष्णोऽमर्षेण योसभः ।
युद्धाय निर्जगामाशु नदन् सैन्येन संवृतः ॥
स गदाभिगतिः सैदः सीनान्यौ मीरखानकौ ।
योसभस्य ननाशाशु बलेन महता युतः ॥
निचिक्षेप च कारायां शुङ्गीमेरं बलान्दितम् ।
सेनयानुगतं राजा चौडूरग्रामवासिनम् ॥
ग्रामं भरतलाभिख्यं नजीरण गृहमपि ।
संजातरोषो भूपालो भस्मसात् संचकार ह ॥
अतः पराजितः क्वापि योसभो रक्षयात्मनः ।
श्येनत्रस्त इव पारावतो दुःखी जुगोप स्वम् ॥
रिपुं जित्वा शिश्रियेऽथ तेन सिंहासनं तदा ।

सैदेन पौरदुःखापहारकेन पुनश्च तत् ॥
ईब्दालेनाथ मृगयापदेशेन वनीपकः ।
अलीचक्रो नौरुजजः स्थापितो यो सभान्तिके ॥
अभिन्न इव तस्माद्धै जातोऽन्यान् वारयन् द्रुतम् ।
श्येनो यस्मिंस्तरौ तिष्ठेद् द्विजा तत्र कुतः परे ॥
ईब्दालः सैदसविधमागत्याथ जगाद तम् ।
निगडैः किं न बद्धोऽयमल्लीचक्रस्तवाहितः ॥
राज्यभेदात्स विश्वस्य तद्वाक्यं स्वात्मपातकृत् ।
चिक्षेप तं च कारायां विशन् वह्निं पतङ्गवत् ॥
वैरमकीर्तिजातं च दैवादित्थं ततान सः ।
मोहात्तु विधुरे काले नरो नाशाय चेष्टते ॥
दोलाचक्रः शंसदुभः जग्मतुर्हसनान्तिकम् ।
तदा संजातरोषौ तौ तत्सहायौ धियान्वितौ ॥
शंसचक्रोऽलंशिराखानाद्याः सैद अभोलकम् ।
ऊचुर्नृपहितमिष्टुकामास्ते भूपभर्त्सनम् ॥
उन्नतिमसहिष्णुर्वै चक्रानां स मोभारकः ।
नेष्यत्येवाखिलानाशु दुर्गतिं राष्ट्रियानसौ ॥
स्वामिनोऽसौ नृपः पौरैर्नाशेपि हर्षितः खलः ।
नेतव्यः क्षीणतां नोचेन्नयेद्दासत्वमानयेत् ॥
एवं विधैरमर्षोत्पादकैर्वाक्यैर्महीपतेः ।
भेदं निन्युस्ते प्रधनमिच्छन्तस्तेऽप्यभोलकम् ॥
योसभं संहतैस्तैश्च तत्र आनीय निर्भयैः ।
युद्धं प्रवर्तितं राज्ञा नयविक्रमसंमितम् ॥
रोगग्रस्तो नृपः खिन्न ईब्दालं सन्दिदेश सः ।
वार्तां महादभट्टेन लेखार्पित महीभरः ॥
श्वो जालद्रगरे युद्धं भविता रिपुनाशकम् ।
त्वमेव मुख्यस्तत्कर्मदक्षो राजा त्वमेव हि ॥

आजुहाव पुरं गन्तुं योसभं स रणाङ्गने ।
ईब्दालोऽपि जयमिच्छन्नीत्याकपटपण्डितः ॥
सैदं जगादापि नदा मुक्तेनालीचकेन सः ।
खानगाहमागतेन त्वया सन्धिर्भविष्यति ॥
परं राजपदारूढ़ो योसभोऽत्र भवेदिति ।
कृष्याजीवी यथा यत्नात् फलमाप्नोति चेन्नरः ॥
यथोचितफलवाप्तौ गतेश्चान्येषु सैदराट् ।
अङ्गीचकाररोगार्तस्तद्वाक्यं भयविह्वलः ॥
अलीचक्केनानुगतः खानगाहागतस्ततः ।
हैदरेण गृहंनीतः सैदः स्वी जनवत्सलः ॥
काराबद्धं विधायैवमलीचक्कयुतं च तम् ।
निः सहायमथेब्दालः सहर्षोऽप्यभवद्भृशम् ॥
शठैरनुमतो धूर्तो योसभं सन्दिदेश सः ।
राज्याप्ति र्दुलभातेत्राधुना नूनं हतौजसः ॥
आगतो येन मार्गेण गच्छ तेनैव सत्वरम् ।
नो चेद्वध्यः श्वभिर्भक्ष्यो वा बद्धोऽत्र भविष्यसि ॥
खानात्प्रतिनिवृत्तस्तु व्यग्रो यो सभ शाहकः ।
दिगन्तान् चलित्स्तस्तो मृगेन्द्रादिव जम्बुकः ॥
अयं लघुरेष महानिति चिन्तालवोऽपि वै ।
नास्त्युद्धतानां मनसि धोराणां नयवेदिनाम् ॥
उदयः समता हानिस्त्रयः कालामहीभुजाम् ।
निवार्यन्तेऽत्र संसारे नीतिज्ञेन नरेण ते ॥
गतेऽकरान्तिकं सैदे भुक्त्वा क्ष्मां द्विदिनाधिकम् ।
षाण्मासिकं तु दिष्टं स योसभो हर्षितोऽभवत् ॥
पुत्रं शङ्करखानस्य मनोज्ञं नीतिवित्तमम् ।
ईब्दालोऽभिषिषेचाशु गुणिनं राज्यकर्मणि ॥

इति राजतरंगिण्यां प्रथमस्तरङ्गः

---

# श्रीमार्तण्डक्षेत्रम्

[ ले०—पं० नित्यानन्दः शास्त्री ]

अस्ति पूर्वापरवारिनिधिपर्यन्तविस्तृतहिमालयाभिधनगाधिराजकुक्षिमध्यस्थिते नैकविधपरमपवित्रतीर्थवृन्दसुशोभिते शारदाचरणसरोजरजःपवित्रिते भारतवर्षालङ्कारभूते कश्मीरदेशे सकलपुण्यस्थानशिरोमणीभूतं पावनतममतिप्रसिद्धं मार्तण्डक्षेत्राभिधं प्रधानतीर्थम्। यदीययात्रायै प्रतिवर्षं देशदेशान्तरस्था जनगणाः समागत्य स्वचक्षुःप्रीणनं परमपुण्यावाप्तिं च साधयन्ति। विशेषतो मलमासे प्रायशः सर्वे सनातनधर्मावलम्बिनः स्नानेन दानेन स्वकीयपितृगणतर्पणश्राद्धादिकरणेन च पूर्वजन्मार्जितबहुपुण्यपुञ्जसमासादितं स्वीयं मनुष्यजन्म सफलयन्ति स्वपितृगणांश्च तत्तद्यातनाभ्य उद्धरन्ति। यदीयं माहात्म्यं बहुशः तत्तच्छास्त्रेषु प्रतिपादितमस्ति, तद्यथाः—

"क्षेत्राणामुत्तमं क्षेत्रमस्ति कश्मीरमण्डलम्।
सिद्धपीठतमाख्यातं शिखरे हिमवद्गिरेः॥
त्रैलोक्ये भूतलं सर्वं तत्रापि हिमवान्गिरिः।
तत्रापि मंडितं तीर्थैरस्ति कश्मीरमण्डलम्॥
चत्वारिंशच्चपंचाथ तत्र स्थानानि शूलिनः।
षष्टिर्विष्णोः तथा त्रीणि स्थानानि परमेष्ठिनः॥
द्वाविंशतिश्च दुर्गायाः सन्ति पुण्यानि तत्र वै।
येषां दर्शनमात्रेण सद्यः पापक्षयो भवेत्॥
किं वात्र बहुनोक्तेन मुनयः सिद्धिदायिभिः।
तीर्थैर्विरहितः पुण्यैस्तिलांशोपि न यत्र वै॥
अस्ति तत्र महत्क्षेत्रं मार्तण्डं नाम भास्वतः।
यत्र पातकिनो यान्ति कृते श्राद्धे विमुक्तताम्॥
उत्तरे हिमवत्कुक्षौ शुभे कश्मीरमण्डले।
क्रोशत्रय परीमाणं सूर्यक्षेत्रं विमुक्तिदम्॥

चक्रेश्वरात्समारभ्य यावद्गौतमसंगमम् ।
मार्तण्डं नाम तत्क्षेत्रं पितॄणां मुक्तिकारणम् ॥
स्पर्शनादेव तोयस्य हरन्त्या पातकं नृणाम् ।
नद्या पश्चिमगामिन्या चाकया परिशोभितम् ॥
पूर्वादिक्रमतो भर्गशिखादिभिरधिष्ठितम् ।
परितो रक्षितं साक्षाद्देवीभिः परशक्तिभिः ॥
यस्तु वर्षशतं पूर्णं गयाश्राद्धं समीहते ।
दिनमेकं तु मार्तण्डे श्राद्धं पुण्यं तु तत्समम् ।" इत्यादि ।

उपरिलिखितशास्त्रपर्यालोचनया ज्ञायते यत्समस्तपापचयापहारकं निखिलपुण्यफलप्रदं पितृगणमुक्तिदायकं च जगत्प्रसिद्धं मार्तण्डक्षेत्रं वरीवर्ति ।

एतत्स्थानं च श्रीनगरात्पूर्वदिशायां विंशतिपरिमितक्रोशान्तरे तिष्ठति । तत्रचानादिकालादारभ्यातिपवित्रजलप्रवाहाय प्रवृत्तौ द्वौ-नागराजौ विमल—कमलनामानौ स्तः । ययोर्दर्शनमात्रेणैव चक्षुषोः परमप्रीतिश्चित्तस्यानन्ददोहश्च समुत्पद्यते । किमु वक्तव्यं स्नानस्पर्शनादिना । गौतम-नागराजश्च पर्वतपादमूले तयोरेकक्रोशान्तरे स्थितोऽस्ति ।

सार्धवर्षद्वयानन्तरं यदा मलमासस्यागमो भवति तस्मिन्समयेतु पूर्णं मासं यावद्यात्रिकाणां तत्र गमागमौ वर्तेते । केचित्स्नानदान-श्राद्धाद्यनुष्ठानेनात्मानं प्रीणयन्ति । केचिच्च धर्मशास्त्रोक्तनारायणबलि-विधानेनागम्यगमनाऽभक्ष्यभक्षणाऽपेयपान, परहिंसा, परापवाद, मद्यस्त्रीनिषेवण, सुवर्णस्तेय, भूधेनुहरण, हीनसख्य, भार्याविक्रयाऽनाहिताग्निताऽपण्यविक्रयाऽयाज्ययाजनाऽदत्तादानऽसम्बद्धप्रलापाऽनाचारसेवनाऽत्मघातादिबहुविधदोषदूषिताञ्जलमग्नाग्निगिरिभृगुवृक्षप्रपतितात्राजचौरविषाग्निदग्धाञ्छृङ्गिव्याघ्रव्यालवृकादिग्रस्तांश्च स्वपितृगणान् स्वसम्बन्धिनः स्वसुहृद्गणांश्चतत्तन्नरकयातनाभ्यः समुद्धरन्ति । यदीयमहिमानमाकलय्य पूर्वतनैर्ऋषिभिस्तत्र चिरकालं

स्थितिः तपश्चर्या चाश्रिता। बहुभिः प्रसिद्धतमैर्ललितादित्यप्रभृतिभिराजभिश्च स्वकीययशः कायोपवर्धकानि नानाविधान्यतिरमणीयानि-पत्तनान्युद्यानानि च यत्र संपादितानि। येषां जीर्णभागा अद्यापि-तत्तत्प्रदेशेषु दरीदृश्यन्ते, तद्यथा, श्रीकल्हणमहाकविप्रणीतायां राजतरंगिण्यां "सोऽखण्डिताश्मप्राकारं प्रासादान्तर्व्यधत्त च, मार्तण्डस्याद्भुतं धाता द्राक्षास्फीतं च पत्तनम्" इति।

अन्येषामपि कश्मीरदेशो भूस्वर्ग इत्यवधार्य ग्रीष्मसमये केवलं परिभ्रमणार्थमागतानां महानुभावानां भाग्यशीलानां च पुरुषाणां मार्तण्डप्रदेशस्थनिरन्तरवृक्षच्छायाशीतलानि शाद्वलस्थलान्यतिमनोहरान्निर्झरघोषांश्चावलोक्य हृदये महान्परितोषः संपनीपद्यते-तमामित्यहोभोगमोक्षसुखावहमेतत्तीर्थमाहात्म्यं कस्य न श्रेयस्करमिति प्रसंगेन बहुवित्सु।

---

## सन्ध्याभाष्यम्—ब्रह्मसूत्र निर्णयः

[ प्रकाशकः—गोविन्दराजानः ]

त्रिवृतं ब्रह्मणः सूत्रं षण्णवतिसमुद्भवैः।
तन्तुभिः साध्यते मूलं पर्वभिश्चतुरंगुलैः॥
अत्राभिसंधिरस्माकं न किंचिद्भासते हृदि।
किमर्थमेतत्क्रियते गतानुगतिकैर्जनैः॥
शिष्यं पृच्छन्तमित्येवं दयावान् प्राह दैशिकः।
गायत्री प्रकृतिर्ज्ञेया गुणत्रयमयी परा॥
द्वात्रिंशत्संख्यया युक्ता वर्णास्तत्सादिनामकाः।
स्वरूपमस्या गायत्र्या मंत्रराजस्य चोत्तमः॥
एकत्वं सूचितं शास्त्रे गायत्री मंत्रराजयोः।
कृतं समरसात्मत्वं यदस्ति प्रथितं ध्रुवम्॥
द्वात्रिंशदप्यक्षराणि त्रिसंख्यागुणनेन च।
जायन्ते षण्णवत्या तु संख्यया तन्तुपूरणात्॥

वर्णा द्वात्रिंशसंख्याका गायत्रीदेहरूपिणः ।
त्रिगुणी करणं चैव किमर्थं वर्णितं त्वया ॥
न्यूनाधिकत्वं किं न स्याद्गुणनैरिह चेन्नहि ।
शक्तिरेकापि सा देवी गायत्री शिवरूपिणी ॥
गुणत्रयमयी जाता प्रकृताण्डस्वरूपिणी ।
इच्छा ज्ञान क्रियारूप त्रित्वेनैव च संस्थिता ॥
स्वतन्त्रा परमेशानी देवी शक्त्यण्डरूपिणी ।
विद्यारागकलाभिख्य त्रैरूपेण च संस्थिता ॥
मायाण्डे शुद्धमार्गे च महामायानुवर्तिनी ।
सर्वत्र शुद्धाशुद्धा च सृष्टौ त्रैरूप्यमेव हि ॥
परा पराया गायत्र्यास्त्रिगुणी करणं ततः ।
गुणत्रय मयं सूत्रं प्रोतं ब्रह्मणि यत्परे ।
ब्रह्मग्रन्थियुतं तस्माद्धृदये धारयेद् द्विजः ॥
गुणत्रयमयं विश्वं ब्रह्मणि ग्रथितं परम् ।
हृदये धारयेत्तत्त्वं सदा सर्वत्र संस्थितम् ।
इत्थं मनसि कृत्वैव शिष्यकण्ठेऽर्पयाम्यहम् ।
यज्ञोपवीतं परममित्युक्त्वा ब्रह्मसूत्रकम् ॥

---

## समालोचनम्

### स्तुतिकुसुमाञ्जलिः काव्यम्

जैनाचार्य श्रीदेवचन्द्रसूरिरचिते स्तुतिकुसमाञ्जलिकाव्ये जैनधर्मप्रवर्तकस्य तीर्थंकराणां गुणानवलम्ब्य पार्श्वनाथस्यापूर्ववर्णनं जन्मभूमिबाल्यकालविद्यादीक्षादिग्रहणात्मकं सरसेषु पद्येषु वरीवर्त्ति । वस्तुतस्तु श्रीदेवचन्द्र सूरिणा महताऽभ्यासेन निखिलमपि भगवतः पार्श्वनाथस्य वृत्तं गीर्वाणभाषायां शार्दूलविक्रीडितेष्वष्टस्वेव श्लोकेषूपनिबद्धमस्तीति धन्यवादार्हो देवचन्द्रसूरिः, येनेदानीन्तने

सुरभारतीह्रासकाले पुनरपि स्वकीयैर्हृद्यैः पद्यबन्धैरौन्नत्यं नीयते, निजस्य च गुरोर्हेमचन्द्रस्य स्वैरेव रचनाविशेषैश्चरित्रवर्णनं महान्तं तोषं जनयतीति—अहो श्लाघनीयोऽयं गुणविशेषो विषयरचनानुगतः विशेषतश्चार्हतानां वचनेषु श्रावकमहाभागानां सम्यगवबोधविधानाय च प्रचलितायां मातृभाषायामिति—

## पूर्णिमायां सूर्योदयः

प्रचलति पूर्णिमायां वाराणसीतो महामहोपाध्यायवर्यस्य श्री मदन्नदाचरणशर्मणस्तर्कचूडामणेः सूर्योदयः, यस्मिन् ज्यैष्ठमासीये पत्रे सम्पादकीय विचारधारामन्तरेति वृत्तादयो मनोहरा लेखा भिन्न-भिन्न विषयेषु यथा काल प्रकाशिताः। प्रतिसत्रं लब्धभोजनाच्छादनवृत्तयोऽन्तेवासिगणा दशसाहस्रीं सख्यां भजन्तः प्रतिरथ्यं पाठशालासु धर्मशालासु देवमन्दिरे भूदेवगृहेषु विविधविषयां विद्यामधिगतवन्तः समानेन मनसा वाचा कर्मणा च संहताः सन्तो भगवतोऽपारकरुणानिधेर्विश्वनाथस्य चरणारविन्दछायामाश्रितवन्तो-गुरुभिः साशीर्वादमनुज्ञाता भूयो भूयो यदि जागरूका यतेरन् तदा चिरेणैवानेहसा संस्कृतविश्वविद्यालयस्य दृढा स्थापना स्यादिति-आशासते विद्वज्जनानुरागी गीर्वाणरसिको जनसङ्घः।

सर्वविद्याजननी सुरभारती मृतभाषेति परैरुच्यमाना शतशः शोकसन्ततिमुत्पादयति सहृदयानां मनःसु। रागद्वेषावृतबुद्धीनां परेषां यदीदृशी बुद्धिस्तर्हि भारतीयै र्दैवगिर उद्धाराय कीदृशो नक्तं-दिवा यत्नो विधेय-इति नैव सम्यक् प्रकाशिता पण्डित रामकृष्ण शास्त्रिणा काचनापूर्वा सरणिः। तदर्थं सर्वैः काशीस्थैरन्यदेशीयैश्च पण्डितप्रकाण्डैरवहितेन चेतसा यथाशक्ति प्रत्यहं क्षुण्णोऽनायासकरश्च मार्गः शीघ्रमेव प्रकाशनीयो येनान्ये विपक्षाः कदाचित् पुनरपि एवं सडिण्डिमघोषं नोद्घोषयेयुरिति सविनयं निवेदयति—

( 'श्रियः' समालोचकः )

———

# परिषद्-वृत्तम्

धर्मसम्बन्धिष्वधिवेशनेषु साधारणेषु प्रायशोनास्त्युपस्थितिः पुरुषाणामद्यशः। दरीदृश्यन्ते पङ्क्तयः स्त्रीपुरुषाणां क्रीड़ाक्षेत्रेषु—हाकीक्रिकिटफुटबालटेनिसादि कौतुकेषु। सिनिमारङ्गभूमि नाट्यगृहेषु त्वसंख्यो जनसमूहः। कुत्रास्ति विदुषां समाजे जनानामासक्तिः? कथंचिदधिवेशनेषु राज्यनीतिकसमाजाचरणव्यवहारपरिवर्तनशीलेषु तु भवेत् लोकसंग्रहः। केषांचिद् स्यादाङ्गलभाषाव्याख्यानेषु रुचिः परं कथं संस्कृतप्रणयिनां समाज आगमनं छात्राणामितरमनुष्यानाञ्च ?

**ज्येष्ठमासः—**

हर्षास्पदं यत् ३० संख्याकाः विद्वांसः २७ तमे तिथौ सौर-ज्येष्ठस्य हिंदु-सभामन्दिरे माईसूमाप्रदेशे सभामलङ्कुर्वन्। यद्दृच्छया विषयानां प्रबंधे तु पण्डितमहोदयैः गोविंदराजानक प्रेमनाथ हण्डू, जगन्नाथ जाडू, विद्याधर, प्रेमनाथ लुंगादिभिः स्वविचाराः ललित-भाषावचनैः विविधविषयेषु श्राविताः। वाराणसीनिवासी श्री रामेशदत्त पाण्डेः कश्मीरराज्य गृहमन्त्रिणः ( होममनिस्टरस्य ) शिक्षाविभागस्य भूतपूर्वो मन्त्री उत्सवस्यास्य प्रधानपदं स्वीचकार। आवश्यककार्यवशात् होरार्धमेव कालं स्थित्वा निर्गते तस्मिन् पं० नित्यानन्दशास्त्रिभिः प्रधानासनं सुशोभितम्। मन्त्रिणा परिषद् प्रधानंमहाशयलालाशिवदासं पञ्चनददेशात् समागतं स्वागतवचनैः सम्मान्य सभाकार्यं सुष्टु संचालनार्थे प्रस्तावाः उपस्थापिताः। सर्वसम्मत्या स्वीकृताश्च।

आषाढ़मासस्य परिषदि लाला शिवदासः एम०ए० एल० एल० बी०सभाप्रधानः गीतोपनिषदयोः संबंधविषयमवलम्ब्य निबंधं पठिष्यति। पण्डिताः टीका टिप्पणी वादविवादादिभिः पर्यालोचयेयुः। समस्या पूर्तयोऽपि पंडितैः छात्रवर्गैश्च निम्नलिखितयोः पदयोः कार्याः।

(१) गुणा गुणज्ञेषु गुणा भवन्ति।

(२) ज्ञानं बलं केवलम्।

**आषाढ़मासः—**

वि० सौरवर्षस्य २७ तमे दिवस आषाढ़स्यभूदधिवेशनं

मासिकं परिषदोऽस्याः। प्रधानमहोदयेन लाला शिवदासेन महत्त्वपूर्वको निबंधो गीतोपनिषद्योः सम्बंधविषयेऽपाठि। कृतभाषणेषु पं० रमानाथ गोविंदराजानककुलभूषणैः जगन्नाथ प्रेमनाथ प्रभृतिभिः छात्रैश्च विषयेऽस्मिन् कृतेषु स्वव्याखानेषु भिन्नविषयेषु सभा विसर्जिताभूत्। ला० शिवदासस्य लेखः श्रियः पृष्ठेषु प्रकाशितः भवेत् समये। अतोऽस्य विस्तारोऽत्र न क्रियते।

**श्रावणमासः—**

सौर श्रावणमासस्य ३० तमेऽहनि सभायाः सरस्वतीसम्मेलनं पराह्णे सार्धपञ्च वादने सूचनापूर्वमभूत्। यद् पं० बुद्धदेवो विद्यालङ्कारो देवताविषयं वेदेष्ववलम्ब्य व्याख्यातुमागत आसीत्, परन्तु सदस्यानां संख्याया न्यूनत्वात् केवलं भूमिकारूपमारम्भमकरोत् अवशिष्टं सभानुमत्या सौरभाद्रपदस्य पञ्चमे दिवसे सोमवासरे व्याख्यातं भवेत्। श्रीअमरनाथस्वामीयात्रारम्भ दिवसोऽयं येन बाहुल्येन पंडिता 'छड़ी' प्रधान दर्शनाय गता अत्रागमनेऽशक्ताश्च।

**भाद्रपदमासः—**

पूर्वनिश्चयानुसारेणाति समारोहेन सम्मेलनं भाद्रपदमासस्य ५ म्यां तिथौ समजनि। पं० बुद्धदेव महोदयानां वेदेषु देवता शब्दस्य व्याख्यां श्रोतुं बहवः पंडिताः ५० संख्याका आगता सभायाम्, विद्वद्वरैः बुद्धदेवमहाशयैः पूर्णं होरामात्रं निरर्गलं देववाण्यां भाषणेन स्वमुखारविंदात् धाराप्रवाह प्रसारे आनंदिताः सभासदाः। ऋग्वेदे मरुतसूक्तस्य व्याख्यायां तर्कप्रमाणाभ्यां मरुतशब्दस्य मनुष्यरूपमर्थं निर्दिश्य सोम शब्दस्य चौषधिरेवार्थः साधितः। देवताशब्दस्यालौकिक देवशक्तिरेवार्थस्तु खंडितः महाभागैरेतैः। पं० गोविन्दराजानकशास्त्रिणा निराकृत एतेषां देवताशब्दस्यार्थः यास्कमुनेः निरुक्त प्रमाणेन। उत्तरे पुनरपि बुद्धदेवेन गोविंदराजानस्य यास्काचार्यानां प्रमाणस्याभिप्रायः खंडितः। एवं १½ होरा मात्रं अभूत् व्याख्यानं संवादश्च। पं० महोदयानां व्याख्यानं पं० गोविंदराजानकस्य प्रतिपक्षश्च 'श्रीः' पत्रे पाठक महाभागानां विनोदाय प्रकाशितं स्यात् समय इति।

कुलभूषणः

परिषन्मन्त्री।

# विद्वत्सु संस्कृत लेखकेश्वभ्यर्थनम्

विदुषां संस्कृत लेखकानां मनस उद्गाराय लेखनीचालनाय वा 'श्रियः' पत्राणि सदैव भवन्ति । संस्कृत साहित्य श्रीनगरस्य 'श्रीः' पत्रिकेयं आर्यजातेः सभ्यताया उद्धाराय देववाण्यः प्रचाराय च प्रकाशितास्ति । हिन्दू ( आर्यमात्रस्य ) जातेः कस्यचिदपि मतं संस्थां वा न वयं खण्डयामो न च कस्मिंश्चित् विशेषरागं दर्शयामः । अस्माकं सभासदः सनातनधर्मार्यसमाजबौद्धजैनमतानुयायिनः सर्वदा परस्परं प्रेम्णा प्राचीनभूम्यामस्यां सरस्वतीसम्मेलनेषूपतिष्ठन्ति । 'श्रियः' पृष्ठान्यपि साहित्यदृष्ट्या सर्वेषां विदुषां सम्मति प्रकाशनाय । प्रेष्यन्तु श्रीमन्तः सुन्दरान् लेखान् कविताश्च साहित्यदर्शनेतिहासवेद-स्मृतिशास्त्रविषयकाः । सादरं धन्यवादपूर्वकं प्रकाश्यते ।

सम्पादकौ



भीमसेन विद्यालङ्कार के प्रबन्ध से
'नवयुग प्रिंटिंग प्रेस', १७, मोहनलाल रोड, लाहौर में मुद्रित ।

# संस्कृतसाहित्यपरिषदः श्रीनगरस्य

## श्रियश्च नियमाः ( भारतीय भाषा — परिचय )

**उद्देश्यः—**

परिषदोऽस्याः केवलमेकएवउद्देश्यः—संस्कृतभाषार्यसभ्यता रक्षार्थं प्रचारः ।

**नियमः—**

सभासदास्तु न्यूनान्न्यूनं आणकानां चतुर्णां प्रतिवर्षं दानेन सर्वे भवितुमर्हन्ति उपरिनिर्दिष्टमुद्देश्यमुररीकृत्य ।

**'श्रीः' पत्रिका**

एतत् प्राप्त्यर्थं १।) श्रीनगरात् भिन्ननगरस्थेभ्यः । १) श्रीनगरस्थेभ्यश्च शुल्करूपेण धनमपेक्ष्यते । अनेनैव पत्रिकापि लभेत सभासत्त्वमपि च भवेत् ।

**सहायता**

परिषदो व्ययः पत्रिकाया अस्याः कृते शुल्कादत्यधिकं भवति, यदि शुल्कं सर्वेभ्योऽपि आगच्छेत् । परन्तु धनाभावात् बहवः संस्कृतज्ञाः छात्राः ब्राह्मणाश्च विनामूल्येनैव लभन्ते पत्रम् । अतः सहायतारूपेण किञ्चिद् धनमस्यै अवश्यमेव संस्कृतोद्धारप्रणयिभिर्दातव्यम् ।

**पत्रप्रकाशनसमयः**

त्रैमासिकं पत्रमिदं सौरवर्षस्य चैत्र, आषाढ़, आश्विन, पौष, मासेषु निर्गमिष्यति । पत्रप्रकाशनमासानन्तरमपि पत्रस्यानुपलब्धौ सूचनाप्रेषणेन पुनरपि प्रेषयिष्यते पत्रम् । मासादनन्तरं तु पत्रं न प्राप्यते ।

**पत्रव्यवहाराः**

लेखप्रेषणाय पत्रप्रबंधाय च नि[illegible] [illegible] प्रत्ययेन पत्रव्यवहारो विधेयः

आ[illegible]न १९९१ }
अक्तूबर १९३४ }

[illegible] कुलभूषणः
परिषन्मन्त्री
[illegible] सञ्चालकः
[illegible] सम्पादकश्च
सुन्वार बाग़, श्रीनगर,
( कश्मीर )